८; १२,४; ७२, [७; ८६, ८ (२१)]; ७९,४, ८२, ३; १०,१, ६; ६२,४, ६४,१३; खि ५,७, १,१; मा ११,७६; २९,१;३४, १५†; का १२, ७, ११; ३०, १,१;३३,१,९†; तै ३, ५.११, १†; ४, १, १०, १, मै †१, ६,२; ७; २, ७, ७; १०, ३†, ३,१,९, ४,१३, २†; काठ १५, १२†; १३, १६, ७; १९, १०, क ३०, ८; †कौ १, ४६१; २, ४७६; ५४९;६६७, ३,३,१३$; †जै १, ४८, ७; २, २, ८; ३, ३५, १०; ४३, ५; ५५,८; शौ ७,६४,१[a], पै २०,८,६; -भिः ऋ १, ५९, १; २, १०४, ४; १०५, ९; १६३, १२; १६४, ३३;३४[b];३५[c]; ४,१०,८; ४४, ५;५८,१;६,४७,२८; ८,४१,६; १०१,१५;९,७४, ४[d];१०,१०, ४;४६,३;६१,१८; १९; खि २, १०, ६, ४,४, ३[e]; मा १०,८; ११, १२; १७,८९†; १८,५४; १९,८६,२०,१;९; २३,६१†[b]; ६२†[c]; †२९, २१; ५४; ३८, २०, का ११,४,४; १२, २, १; १९, १, ३†; २०, ३, ४; २१, ६, ७; ७,१; ८; २५,१०,९†[b]; १०†[c]; ३१, ३, १२†; ३८,५, ३; तै १, ३, ९, १; ८, १६,१; ४,१,२,१; ३, ४, २; †६,६,६; ७,५†; ७,१३,२; ¶५,२,८,७; ३,२,३; ६, ३, १, ५¶; ७,५, १५,२¶; मै १, ६, २†; २,६, ९; ७,२; १२,३; ३,१,३,५¶; २,६¶; ६,७¶; ११,८;९;१६, ३†; ¶४,४,३; ६,१; ९,१०$; काठ ९, १६¶; १५, ७; १६, १; १८, १५, ¶२०, ७[२]; ११; ¶२६, १; ३७, १६¶; ३८,३; ४[२]; ३९, १; ४०, ७†; †४६, १; ३; क २९, ४; ¶३१, ९[२]; १३; ४०, ४¶; शौ १,१३,३[f]; ६,९,३; ५४,३; १२५,३†; ९, १, ४;१०, १४[g]; १५, १२†, १४†; १६,४,१[२]; १८,१, ४†; २०, १४३, ५†, पै २,९०,४; ३,३९,६; ८, १३, १†; १३,५, २८; १५,११,७†; †१६, ३२, ४; ६९,२;४; १९,३,५[f]; २८, १४; ३१,१२; ५२,१†;-भिना ऋ ६, ३९, ४; -भिम् ऋ १, १८५,५; २,३,९, ४०, [१; ३, १७,४],४; ५, ४३, ८; ४७,२; ६,७,२; ९, १०, ८; १०,५,३; १२४,२; मा ६,१४; १३,४२; ४४; ५०[g]; २३,५९;६०; २७, २०; का ६, ३, ३; १४, ४, ५; ७; ५,४[g]; २५,१०,७; ८; २९, २,१०; तै १, ८, २२, ५†; ३, १,११,२†; २, ५, ३[h]; ४, १, ८,३;२,१०,१;२; ५,२,८,७¶; ७, ४, १८,२[२] ‡[b>c]; मै १, २, १६; २, ३,४; ७, १७[२g]; १२, ६; †४, ११, २; १३, ५; १४, १; ८; काठ ३, ६; ८, १७†; ¶१०, ४[१]; १३, १७[२g]; १८, १७; २१†; २०, ७¶; २३, ४¶; ¶२६, १[२]; ¶३७, १६; ४४,७[२] ‡[b>c]; क २,१३; २५,८; २९, ५; ३१, ९¶; ३६, १¶; ४०,४[२]¶; †कौ २,४७६;४९२; †जै ३, ३५, १०; ३८, ६; शौ ३,३०,६; ४, ११, ६[i]; ५,२७, १०;९,१५, १३‡[b]; ११,९, ४; १२,३,४०; १३, १, १४; ३७; पै १,७६, ३[?j]; ५, १९, ६; ९, १,१०; ११,१; १३, १४, १०; १६, ६९, ३‡[b]; ८२, ४, १७, ३९,१०; १८, १६, ४; १८,७; -भी ¶काठ ११, १; -भीः शौ १९,५३,२; पै १२, २,२; -भेः का २,३,६; मै ३, ६, ७¶,-भौ ऋ १०, ११,३; ८२, ६; मा १, ११; १७, ३०†; का १, ३, ८, २, ३,४; १८, ३, ६†; तै ४, ६, २,३†; काठ १८,१†;¶२०,७[२];

a) सपा. नाभा <> पृष्ठे (माश ८,६,३, २० च) इति पाभे.।

b) सपा. नाभिः (लाश्रौ ९,१०,१३ च)<>नाभिम् (तैब्रा ३,९,५,५ च) इति पाभे.।

c) सपा. नाभिः (लाश्रौ ९,१०,१४ च)<>नाभिम् इति पाभे.।

d) सपा. नाभिः<>योनिः इति पाभे.।

e) नासि इति पाठः? यनि. शोधः द्र. (तु. सपा. शौ १३,३)।

f) पाठः? नु+आविस्(:)>तस. *नाविस्(:) किवि. इति शोधः। पाभे. कृते पृ १७५२ *d* टि. द्र.।

g) सपा. नाभिम् (माश ७,५,२,३५ च)<>मायाम् इति पाभे.।

h) सपा. नाभिम् (काश्रौ ९,१२,४ माश्रौ २,४,१,३५ च)<>?नाभिः वैताश्रौ १९,१८ (C. -भिम् इति शोधुकः) इति पाभे.।

i) पाभे. कृते पृ १७१४ *o* टि. द्र.।

j) नाभि इति पाठः? यनि. शोधः।

क २८, २†; ३१, ९$^{२}$¶; शौ १०, ८, ३४; १८, ३, ४०†; पै १६, १५२, १; -भ्या मा २५, ९; का २७, ९,१; मै ३,१५,८; -भ्याः ऋ १०, ९०, १४; मा ३१, १३†; का ३५, १, १३†; मै ३,११,५[a]; ४,८,१$^{२}$¶; १३, ४†; ¶काठ १३, १०$^{२}$; १६, २१§; १९,११$^{२}$; २३,४; २६, १; ¶क ३१,१$^{२}$; ३६, १; ४०, ४; शौ २, ३३, ४‡[b]; ९, १३, १२; १९, ६, ८†; २०, ९६, २०‡[b]; पै ४,७,५;१६, ७५,२; -भ्याम् मा २१,५४[a]; २४, १; का २३, ६, ७[a]; २६, १, २; मै ३,२, ७$^{२}$¶; १३, २[c]; पै १६, १४८, ३; २०,५०,१; -भ्यै मा ३९,२; का ३९, १, १; ¶तै ३, ४,१,३; ६,१,३,४; ३,१,५.

नाभा-नेदिष्ठ[d]- -ष्ठः ऋ १०,६१, १८; -ष्ठम् तै ३,१,९,४¶.

¶नाभि-दघ्न- -घ्नः काठ २१, ४; क ३१, ९; -घ्नम् तै ५, ६, ८,३; मै १, ६, ६$^{२}$; ३, ३,२; -घ्ने तै ६, ३, ४, ५$^{२}$; मै १, २, १०; ३, ३, ४; ९,४; काठ २१,६$^{२}$; क ३१,२१$^{२}$.

?नाभिष्ट्वा[e] पै १९,२८,१४.

?नाम्[f] पै १४, ३,५.

नामन्[g]- -म ऋ १, ६,४; २४,१; २; ४८,४;५३,७; ५७, ३; ६८, २; ८४, १५; १०३, ४$^{२}$;१०८, ३; १२३, ४;९; १२;१५५,[३; ९, ७५, २];१५६, ३; १६४, ३[h]; १८५,१; १९१,१३; २,२०,६; २७,१५; ३३,८; ३५,११; ३७, २; ३,५,६; २०,३;२६,७;३८, ४; ५४, ७; १६; १७; ५६, ४; ४,१,१६; ३९, ४; ५८, १; २; ५, ३, २;३;१०;३०, ५;३३,४; ३७, ४; ४४,२, ८; ५७, ५; ६, ४४, ८; ४८, २१; ६६, १; ५; ७५,८; ७,२२,५;३२,१७; ५६; १०; ५७, १; ८७,४; १००,३; ५[i]; १०३,६; ८, ११, ५; २०, १३; ४६, १४; ८०,९; ९,७५, २; ८६,२०; ८७,३;९२,२;९५, २; ९६,१६; ९९,४; १०९,१४; १०,१२, ६; २३, २; २८, १२; ३९,१;४५,[२[j]; ८४,५]; ४९,२; ३; ५४,४; ५५,१;२;६१,१४$^{२}$; ६४,१; ६८, ७; ६९,५; ७३,८; ८६,२३;९७,९;११५,२; १२३, ४; [(६,२९, ३)]७; १४५, ४; १८१,१; खि २,३,१;७,१;१४, २;४; ८; ४,२,११;४,३;६,३[k]; ७,१; ४;७$^{२}$,१; ३;५;८;१०,२; मा १,३१[l]; ३, ६३[m]; ५,९[n]; ७,२; २९$^{२}$; ८,४९; ९,५; १०, २०; १२,४;११†[i]; ८३†; १४, ४;१५,३; १७,३; ८१†; ९०†; १८,३०;३८; ३९[o]; ४०[o]; ४१-४३;६६†;६७$^{२}$; २२,१९$^{२}$; २९,

[a]) सपा. नाभ्याः<>नाभ्याम् (तैब्रा २,६, १४,४ च) इति पाभे.।

[b]) सपा. नाभ्याः<>यक्नः (आपमं १, १७, ३ च) इति पाभे.। [c]) सपा. मा २९, ५८ तै ५,५,२२, १ काठ ४८, १ पाठाऽभावः।

[d]) व्यप. (ऋषि-विशेष-)। व्यु. ?। पपा. नावग्रहः। तस. पूप. स१ अलुक् उभ. स्वरश्च (पा ६,२,१४०)।

[e]) पाठः? नाभि-+[√स्था>कर्तरि] *स्थायुमन्->तस. *नाभिष्ठायुमन्->नैप्र. *नाभिष्ठ्वन्->-ष्ट्वा (नाभौ स्थितः [यस्मा:]) इति शोधः।

[f]) सपक्षे-नाम् इति पाठः? द्वितीय-पादस्याऽवसानतया संसृजे(न ए)नाम् इति द्वि-पदः शोधः(तु. चतुर्थस्य मन्त्र-स्याऽवसानम्)।

[g]) यप्रा. सन् भाप. नाप. च। व्यु.?। (√नम् [यथा.]>भावे करणे च) *नमस्मन्->नैप्र. यनि. इति कृत्वा यथाप्रकरणं धा. वृत्तिविशेषाः द्र.। तथाहि, यदा भाति, संज्ञापर्यायस्तदा 'नम्यते उच्यते' इति कृत्वा धा. *वचने वृत्तिः। यदाऽदः *दीप्ति-पर्यायः (तु. ऋ १, १६४, २) तदा धा. तत्परा वृत्तिः। यदाऽदः न. द्वि१ किवि. इव प्रयुज्यमानम् अव्य. इति प्रसिद्धं भवति तदा धा. निश्चयसंभावनादिषु वृत्तिः (तु. या [४,२७] प्रा. एव कल्पनायाम्)। <√ज्ञा इति पाउ [४,१५१], <√नम् [*शब्दे] इति पक्षान्तरे अभा.।

[h]) सपा. नाम<>नामा इति पाभे.।

[i]) सपा. नाम (आश्रौ ३,१३,१४; ६,७,८; ९,९,११ आपश्रौ ९,१९,१२ या ५,९ च)<>हव्यम् इति पाभे.।

[j]) पाभे. क्ते पृ १७१४ *m* टि. द्र.।

[k]) सपा. खिसा २८,३ मान इति पाभे.?।

[l]) =सपा. माश १,३,२, १७। मै १,१,११; ४,४; ९ काठ १,१०;५,६;३२,६ आपश्रौ २, ७,९ तु पाठाऽभावः।

[m]) =सपा. काश्रौ ५,२,१७ आपमं २,७,३ पागृ २,१, ११; ३,१५,१९। जैमि १,३६१ तु पाठाऽभावः।

[n]) पाभे. क्ते पृ १७१४ *i* टि. द्र.। [o]) =सपा. माश ९,४,१,८। तै ३,४,७,१ तु पाठाऽभावः।

४५†; ३२, २; ३३,२२†; ४०, ३; का १, १०,४[a];२,१, ८[३b]; ५, ३, २[१c]; ७,१,२; ८,२२,३; ९,१, ४[२], १०,२,१, ११,६,६; १३,१,५, २,२†[d]; ६,९†;१५, १,४, १६, १, ३; १८, १, ४; †१९,१,३; ४; २०, १, १; २, १; २[e]; ३[e]; ४-६; २४, ६, १[२]; ३२,२,५†; ३५,३,३; ४०, १, ३; तै १,२,१२,१[१c]; ४, १, २; ५,८ ५¶, १०, १[३]; ६, ५, १; ७,¶४, ३; ६; ५, १; ३¶; ६, ५¶, ७,१; ८,१४,२; १०,२[३]; २२, १; २,१,११,१†; २,१२, ५†[f]; ४, २, ४¶; ३, २; ५,५, ४¶, ६,६, ४¶, ३,२,३,२;३, ३-४,२; ५,१[g]; ३[h]; ४, ७, १; ३; ५,६,२; ७, २¶; ४,१,१०, ५; †२,२,१[d]; ६, २; ३, १२, २; ४,५,१; ७, २; ११, ४; ६, ६,३†; ¶५,१,८-९, ४; २, ६; १; ३, ५, २;११,३$,४,२, ३, १०,४; ५,९,१[३]; १०, १[३]; २[३]; ३[२]; ४[४]; $६, १, २; ७, ४,१; ¶६,२,५,२[२]; ७,२$, ४,४,३; ६,९,२; ११,१; ७, १, १२, १; २०, १, मै १, १, १२[३]; २, ८; ३,४,¶४,७[३];८; १३[२],५,९[३]¶;

६,२[२]†; ३¶; ८, ६¶; ९, १[४]; ४[२]¶; ५[२]; १०,१२¶; ११,१; २,१,११; ३,१¶; ६,८; १२[२]; ७,८; ९†[d];१२;१३†;८,१; ७; १४[४g]; १२,२[३b]; १३,१[२]; ६†; ११; १२;२१[i]; ¶३,२,७;१०[२]; ३, २; ४[२]; ५; ४, ८; ८, ४[३]; ५; १०; १२, १४$; ४, ¶१, १; ४; ९; १०; १३; ¶२, १[३]; ४[४]; ९; २१[४]$; १२[३]; ४, २; ६; ५, ७; ७, ६¶; ८, ७[३j]; ९,११; १०, ११[२i]; ११, २†; १२, १; ५†; १४, ५†; १४, काठ १,१०[j]; २, ९[१c]; ४, १६; ५, ५; ¶६, १; ६; ७; १०†[f]; ७, ३[३]; ९¶; ११[३]; १३; १४[d]; ८, १¶; ७¶;१३; १७[३];†; ९, ९[२], १९†[d]; ¶१०, १; ७[३]$[j]; १०; ¶११, १[३]; ३; १०; १२, ५¶; १३,१४; १६; १५,६;८[२]; १६,८;९†[d]; १२†; १७, १; ६; १०; १८,१४[१c]; ¶२०, ४; ८; १२; ¶२१, २[३]†; ४; ७; १०; २२,१¶,२¶; १४,१५; ¶२३, ६[२]; ८; २४, ८¶; ¶२५, २[४]; ३; ४,६;८;¶२६,१; ७,२७,१; ३०, ६; १०¶; ¶३१, ७; ८[२]; ३२,४¶; ¶३३, २; ४; ¶३४,

३; १२; ३६,६¶; ३७,९†;१३; १५;१६; ३८, ४,१४; ३९,२[३]; ३[१g];१२†; ४०,३;४[४]; ५;७[२]†; ४१,३;११; ४६,१; क १, १०[j]; २,३[३d]; ३, १२¶; ¶४, ५; ६; ५,२[३]; ८¶; ६,१[२]; ४[d], ६¶;७, ४¶; ८,१; १२[२]; २५,४†; १०; २६, ५; ९; २९, ३[१c]; ¶३१, ६; १०; १४; १७[२]; १९; ३६, ५¶, ¶३८, १; ५[४]; ६; ३९, १¶,३; ¶४०, १;४; ४१,५¶; ४२, १; ४६, ८¶; ¶४७, ७; ८[२];†की १.१४७;२६५;४३८$; २,२९;५१;१७२; २०१; २६५; ९०५‡[k]; ९८३; १११८$; ११४९; ११९७; ३, १, ९$[l]; २, ५;३, ५[३]; ‡[m]; †जै १,१६, ३; २८, ३; ·४६, २$; २, १, ७[२];‡[m]; ५,७; ३,३,८; ५,१०; १६, १०; १८,८; २२,१२, ४, २४,४; शौ १, २४,३[२]; २५,२; ३; २,८,१; ३, ७, ४; १३, १; ३; १४,१; १८,३; २४,२; २६, १-६; ४, ८,३;९,८; १९,५;३१, ५; ५,१,३; ४,९[२]; ५,१; ३;६, ८;६,४; ९,७; २८,१२; ६,१६; २[२]; ४४, ३; ४६, १; ७६, ४; ८२,१; ८३, २; १२१,३; ७,१,

---

[a]) पाठस्य कृते पृ १७९० *l* टि. द्र.।

[b]) सपा. नाम<>नाम्ना इति पाभे.। काठ १,११ क १,११ तु पाठाऽभावश्च। [c]) पाभे. कृते पृ १७१४ *i* टि. द्र.। [d]) पाभे. कृते पृ १७१४ *m* टि. द्र.।

[e]) पाठस्य कृते पृ १७९० *o* टि. द्र.।

[f]) पाभे. कृते पृ १७९० *i* टि. द्र.।

[g]) सपा. तै ४,४,५,१ पाठाऽभावः।

[h]) पाठस्य कृते पृ १७९० *o* टि. द्र.। सङ्कच्च सपा. तै ३,४,७,२ पाठाऽभावः।

[i]) =सपा. आश्रौ ६,९,१[३] आपश्रौ १४,२०, ८[३]। शौ १९,६९,३ तु पाठाऽभावः।

[j]) सपा. मा १०,१५; १९,९ तै १,१६,१,१; २,४,३, १ मै १-२,१, ११ काठ १०,७ शौ २,१७,२ माश ५,४, १,१४ तैब्रा २,६,१,५; ३,११,१, २१ तैआ १०,२६,१ तैआआ १०,३५ मना २,३५ पाठाऽभावः।

[k]) सपा. नाम<>भूत् (या ५,८ च) इति पाभे.।

[l]) सपा. तैआ ९,१०,६ तैउ ३, १०,६ गृसू २,४ ना-(न+[√भा>]अ)भायि इति तैब्रा २,८,८,१ या १४, २ नाभिः इति च पाभे.।

[m]) सपा. परमं नाम<>मातुः परमाणि इति पाभे.।

१; ७,२; १३, २[२]; २१,४;३०, १; ४६,१; ८६, ३; ८,२, २८; ९, ५, ३१[२]–३६[२]; १०,१,११; २, १२; ४, २४[२]; ७, २५; ३१; ८,६;३१; ११,८,४;९, १;१०, १३; १९; ११, ४; १२,१,५४; ४,५; ६,३; १५,१५,३-९; १६, ३,५; १७,१,१-५; १८,१,३४; १९, ३५, १; ३८, २; ३९,३[२]; ४८,६[२]; ४९,७; ५३,७; †२०, १५,३;१६,७; २१,७; ४०-४१, ३; ६७,७; ६९,१२; १२६,२३; पै १,२१,३; २६, ३[२]; ३१,३[२]; ३२, २; ३; ५९, ३; ८६, ६[२]; ९५,२; ९९,२; २,१३,४; २०, ४; ३५, १; ५६,१-५; ५९,११; ३,२,४; ४,१; ३; ९,७†; ११, १-६; ३०,४; ३६,४; ४,२,३†; १२,५†; १७,१; ७†; १९,७†; २१, ७; २४,२[२]; ३; ४[२]; ५,३, ३; ११, ७; २५,५; ३०,२; ६, २,३; ४,१; ३;५;८; ९,१; ११, ६; १२, ५; १४, ८[२]; २१, ६[२]; ७,३, ३; ५, ९; १०, ३[२]; १२, ६; ८, ३, ७-९;७,६; †१३,१; २; ९,७,४; ५[२]; ६; ७[२]; ८, ६; ११,४, १; ६, ५[२];†; ‡[a]; १२, २,७; ३,२; ७,१-१४; १३, ५, १०; १४, ४, ७; १५,१०,८†; १३,३; १५,४;१८, ८; २३,७[२]; १६, १७, ६[२]; ३६, १; ५१, ३; ६०,४; ६६, ३†; ८२,१; ८६, ३; ९; १०१,९; १४१,३; १७, ६,२;९,६; १०,२; १६,६; १८, ३०,१-३;१९,३,५†[2b,c];५,८[२]; १५,१५;१६, १६[२]; १७,४;२२, १३; २३, १; ३; २४, ३; ३१, १२; ३९,७; ४६, १२; ४८,९; १४[२]; ५२,७[२]; २०, १, १; ७; ४, ५; ७, १; १३, ३; १९, ८; २१,३; २५,९; २८,६; ७; ३७, ८; ४१, ८; ४२,७;९; ४३,९[३]; ४५,२;३; ४८,७; ५०, ९; ५३, ५; ११; ५४,१[५]; –०मन् मै १, ९,१[२]; ४; ५; काठ ९, ८; ९; क ८, ११; १२; –¶मनी तै ६,२, १, ३; मै ४,२, २२[२]; ४, ६; –मभिः ऋ १, १५५, ६[d]; १६१, ५; १८१, ४; ३,३८,७; ५, ४३, १०; ५२, १०; ७,५७, ६; तै ३, ५, ५, १[२]; मै ४, २, १२¶; १२, ३‡[e]; –मा[f] ऋ १, १२३, ४; शौ ९,१४, ३‡[g]; पै ६,१२,६?[h]; –मानि ऋ १,७२, [३; ६, १, ४];८७,५; १६१,५; ३,३७,३; ५, ५, १०; ४४, ४; ७,५६,१४; ८, ४१,५; ९, ७५, १; १०, ५, २; ६३, २; ७४,६; १६९,२[1]; मा ८,४३; का ९,६, २; तै ४, ३,१३,६; ५,६,१,२; ७,१,६,८; ४, १७, १†; मै १, ३,९;८,५¶; २, १३, १; ३,८, १०¶; ४, २, १२¶; १०,५†; १२, ३†; १३, ६†; ¶काठ ६, ७; ७,७; १८,२०†; २१, १३; २५,६; २६,१; ३५,१९†; ३९, २६; ४४, १†; ¶क ४,६; ३९, ३; ४०, ४; ४८, १७†; †कौ १, ५५४; २, ५०; †जै १,५७, १; ३,५,९; शौ ३, १३, १;५, ४,८; १९,३९,२; २०,१९,३†; १३२, १३; पै १, ३१, २; ३, ४,१; ६,७, ७; ८; ७, १०, २; १९, ९; १३,१४,६; १०; –म्ना ऋ ६,१८,७; १०, ७७, ८; मा २, ६[j]; ५, ९[२]; ३४; का ५,३, २[२]; ८, ५; तै १, १, ११, २[२k]; २, १२, १[२]; मै १, १, १२[२]; २, ८[२]; २,१, ११¶; ४, १, १३; काठ २,९[२]; क २,३[२]; शौ १०, ७, ३१; पै १७, १०, २; –म्नी शौ ४, ९, १०[l]; पै ८, ३, १०.

नाम-क– -कम् पै १९,२९,७.

नाम-ग्राह[m]– -हात् शौ १०,१,१२; पै १६,३६,२.

¶नाम-ग्राहम् मै २, ४, ८; काठ १२,१०.

नाम-था शौ ११, १०, ७; पै १६, ८५,३.

---

a) सपा. ऋ १०,९७,९ विशिष्टः पाभे.।

b) पाभे. इते पृ १७१४ m टि. द्र.।

c) पाठः? धामन्-> -म इति शोधः (तु. सस्थ. टि. ?विश्व यो नाम)।

d) अर्थः?। नाप. (वर्तुल-, चक्र-)। ऋतु- इत्यत्र तात्पर्यम् (तु. सस्थ. टि. [√वृत्>] वृत्त–)।

e) पाभे. इते पृ १७१५ g टि. द्र.।

f) द्वि३ (तु. GW. GRV. WAO [२,७२ c MVG [२५, B l २] प्रमृ.; वेनु. पपा. वें. सा. द्वि१ इतीव भिन्नार्थः शब्दः।

g) पाभे. इते पृ १७९० h टि. द्र.।

h) पाठः? नाम इति शोधः?।

i) पाभे. इते पृ १३५५ d टि. द्र.।

j) तु. पृ १७९१ b टि.।

k) सकृत् तु. पृ १७९१ b टि. सकृत् च पृ १७१६ c टि. द्र.।

l) छन्दस्तः नामनी इति प्र.।

m) उस. यजन्ते थादि-स्वरः।

नाम-धु[a]- -धुः[b] शौ २,१,३.

†नाम-धा[a]- -धाः[b] ऋ १०,८२,३; मा १७,२७; का १८, ३, ३; तै ४,६,२,२; मै २, १०, ३; काठ १८,१; क २८,२.

नाम-धेय- -यम् ऋ १०, ७१, १; तै ३, ३, ४, १¶; शौ ७,११४, ६; पै १, ८६, ५; ११२,३; २, ६१,१५; ७, ९, १; -यानि मै २,४, ८¶, काठ ११, १०¶; पै १७, १२, २; १३, ९; -येन तै ३,३, ४, १¶; -¶यैः तै २,४, ९,३[२]; मै २,४,८.

नामन्-व(त्> )ती- -तीः मै १, ५,५¶.

[?]नामविभृती[c] शौ १९, १३,११.

[?]ना म स्र सं स्व थं स्र सं न्[d] पै १, २१,१.

?नामहुकाम् पै १७,१५,९.

?नामासि[e] पै २,२०,५.

?नामिरः पै २०,४२,७.

नाम्ब[f]- -म्बानाम् मै २,६,६[g].

नाय- √नी द्र.

१नारक-, २नारक- नरक- द्र.

१नारद[h]- -दः शौ १२,४,२४.

२नारद[i]- -दः ¶मै १,५, ८; ८, २; शौ १२, ४, ४१; ४२; पै २०, ४१,८[२].

३नारद- ०द शौ ५, १९, ९; १२, ४,१६; ४३; ४५; पै ९,१७,५; १७,१७,६; २०, ३; ५; -दः पै १७,१८,४; २०, १, २; -दे पै १९,४८,७.

नारद-वत्[j]- -वान् पै २०, ४५,२.

नारायण[k]- -णम् खिसा ३३, २२; -णाय मै २,९,१.

नारायणी- ०णि खि २, ६[१], ३०.

नारायण-वाहन[l]- -नः खि२,१४,४.

नाराशंस[m]- -सः[n] तै ४, ४, ९,१; काठ ३४, १६; -सा[n]: मा ८, ५८; का ९, ७, ७; -से[o] मा १९, ६१; का २१, ४, ११; -†सेन ऋ १०, ५७,३; मा ३, ५३; का ३, ७, ३; तै १, ८,५, ७; मै १, १०, ३; काठ ९, ६; क ८, ९; जै २,४,७$, पै १९, २४,१०; -¶सेषु काठ ६, ६; क ४,५.

नाराशंसी- -सी ऋ १०,८५,६; काठ १४, ५¶, शौ १४,१,७†; पै १८,१, ७†; -सीः मै २, १, ५¶; शौ १५,६, ११; -सीनाम् शौ १५, ६,१२; -सीभ्यः तै ७,

---

a) नाप. । उस. उप. कर्तरि क-क्विपौ प्र. यथायथं द्र. ।

b) सपा. नामधुः (वैतु. सा. °धाः इति [तु. केचन मूको.]) <>नामधाः इति पाभे. ।

c) विप. [अतिथि-] । पाठः? *नाम विभृतिन्-> -ती इति शोधः । 'नाम वि-भृतं (मिथ्या भृतं [धारितम्]) अनेनेत्य-स्मिन्नर्थे *नाम- विभृत- + इनिः प्र. उसं. (पा ५, २, ८८ [वैतु. MW. नाम-विभ्रतिन्- इति प्राति. इति, W. नाम-विभ्रत् इत्येक-पदो वा नाम बिभ्रत् इति द्वि-पदो वा पाठ इति च ?])।

d) पाठः? सपा. शौ ७,८०,१ आ सुसस· सुसस इति पाभे. ।

e) पाठः? अरुन्धति माता मातॄणां वाऽसि, माम्री त्वम् अमृतस्यैव वाऽसि इति पूर्वार्ध-शोधः द्र. ।

f) नाप. (धान्य-विशेष- [तु. वैप २]) । व्यु ? ।

g) सपा. तै १,८,१०,१ काठ १५,५ आम्बानाम् इति पाभे. यद्र ।

h) व्यप. (गन्धर्व-राज-) । व्यु.? । *वादन-भर-> नैप्र. *नार- (वीणा-)+ √*वाध् [वाद्य-वादने] > भावे *वाध-> बस. *नार-वाध-> नैप्र. यनि ।

i) =१नारद- इत्यनेन सन्न्यायता द्र. । उस. उप. कर्तरि कृत् इति तु विशेषः ।

j) विप. । नारदसमानवृत्तार्थे पाप्र. सादृश्येऽर्थे मतुप् प्र. उसं., यद्वा °द-वान्- इति बस. सति ( √ *वान् [आचारे]>) *वान्- इति उप. स्यात्? अयमेवार्थः नैप्र. तु √*वृन्त् (√वृत् [*आचारे]) >भावे *वृन्त-> *वन्त्->*वात्- इत्येवं सुवचः । उत्तरस्मिन् मन्त्रे कुमार-वान् इत्येष शब्दोऽपि यनि. सन्न्याय एव स्यादिति ।

k) विप (विष्णु-) । व्यु ? । नारा- (जल-)+ अयन- (निवास-) > बस. यनि. इतीव मनुः [१, १०]? । (√नॄ [नये]>भावे) *नार- +(√मि [माने] >कर्तरि) *मयन->उस. *नार-मयण- (प्राधान्य-भृत्-) > नैप्र. यनि. इति मतम् ।

l) विप. (कालिक- [सर्प-]) ।

m) व्यप्रा. । क्वचित् <नराशंस- (यज्ञ-) इति कृत्वा विप. । क्वचिच्च नर->(तत्संबन्धे) *नार- +(√वाश्र [*स्तुतौ]>भावे) *वाशंस-> तस. *नार-वाशंस- > नैप्र. यनि. नाप. इति कृत्वा यज्ञार्थे नराशंस- इत्येतत्पर्याय इति ।

n) सपा. °सः<>°साः इति पाभे. ।

o) तु. पृ १७७६ j टि. ।

५, ११, २; काठ ४५,२; –स्या ¶काठ ११,५; ३७,४.

¶नाराशंसं-पङ्क्ति[a]- -ङ्क्तिः मै ३, १०, ५[b]; काठ २९, १[२]; क ४५,२[२].

१नारि,री[c]- -रिः[d] मा ३७, १; का ३७, १, १; तै १,२,१,१; ४, १,१, ३; ४; ६, २, १०, १¶; मै १,९, १०; २,७, १[२]; ३, ८, ८; ४,९,१; –री[d] मा[e] ५, २२; २६; ६, १; ११, १०; का ५, ६,१;७,१; ६,११; १२,१, १०; काठ २,९; १६, १[२]; क २,३.

२नारि,री- नृ- द्र.

?नार्कविदी[f] पै १३,१,१२.

?नार्त[g] ऋ ७,३४,७.

नार्मि(ण>)णी[h]- -णीम् ऋ १, १४९,३; कौ २, ११२४†.

नार्य- नर्य- द्र.

?नार्विदालां[i] पै १३,१,१३.

?नाव[j]- -वम् ऋ ८, २५,११.

?नाविचर्दं परीधि पै १९,४७,७.

नाव्य- नौ- द्र.

नाश-,नाशनी- प्रमृ. √नश्(अदर्शने) द्र.

?ना श्वा श्वा सु जु ष्ट रा[k] पै १९, २५,९.

नाष्ट्रा- √नश् (अदर्शने) द्र.

नास्[l]- नासा ऋ २, ३९, ६; नासौ पै ७,२,३[m].

?ना स ग्रां हा वा चो हे डा दी- क्षि ता पै ७,८,६.

नासत्य[n]- -त्या ऋ १, १७३, ४; ३, ५४, १६; ५, ४६, २; ७४, २; ६, ११, १; ६२, १; ४; ७, ३९, ४; ७२, ३; ७४,५; ८,५, ३२; ३५; १९, १६; २५, १०; ९,८८,३; १०,७३,४; खि ५,७, ४, ८; १८; मा २०, ७४; २१, ३३; ३३,४८†; का २२, ७, ८; २३,४,५;३२,४,५†; मै ३,११, २;४; काठ ३८, ९; –०त्या ऋ १,३,३; ४६,५; ११६,४;१८०, ९; १८४, १; ३; ३,५८,७; ४, ३७,८; ५,७३,६; ७५,[७; ७८, १]; ६, ५०, १०; ७, ७३, २; ८, ४२, ४;५;६[(८, ५)]; १०, २४,४; १४३,५; खि १,२,१[?][n]; २; ३,६;५,१; मा ३३,५८; का ३२,५,४; –†०त्या ऋ १, ३४, ७;९-११;४७,[७; ८, ८,१४(१,

[a]) विप. (*यज्ञ-) इति कृत्वा बस. पूप. स्वरः।

[b]) सा नराशंस-पंक्तिः इति पाठः? स नाराशंस-पंक्तिर् *यज्ञः इति शोधः (तु., काठ २९,१ ऐब्रा २,२४ [तु. पृ १०३२ *a* टि.])।

[c]) विप. (अग्नि-)। व्यु. ?। नाप. इति कृत्वा नृ->२नारि, री- इत्यनेनाऽभेदुकाः माश [३,५,४,४] काश [४,५,४, ४] प्रमृ.; <न+अरि- इति मा [पक्षान्तरे], सा [तै.] चेति। (√वन् [हिंसायाम्]>भावे) *वनर्->*वनर्- +वि-> बस. नप्र. यनि. (=छेदक-) इति मतम्।

[d]) सपा. नारिः<>नारी इति पाभे.। WAG [३, ९४ *d*] °रिः(<°री [:] इति)।

[e]) °रि इति पपा. चिन्त्यः (तु. काश ४,५,४,४)।

[f]) पाठः? *नार्कविदे- ( व्यप. पुं. [देश-विशेष-]) > -दान् इति शोधः।

[g]) पाठः? *नार-पत्रा- [नौका-] > -त्रा प्र१ (तु. =सपा. तैब्रा ४, १७, १ आपश्रौ १५, १७, ५। मै ४, ९,१४ तु नाव्यां इति पाभे.) इति शोधः ( वैतु. पपा. प्रमृ. नु आर्त [क्रिप. <√ऋ]; PW. प्रमृ. उद्...आर्त इत्यसंगतो द्वि-पदो विभाग इति?)। प्रकरणतः 'अस्य (वरुणस्य) भानुः (?भानोः इति शोधः [तु. मै.]) शुष्मात् *नारत्रा भारम् उद्...बिभर्ति' इति वा. द्र.।

[h]) अर्थः व्यु. च ?। विप.(पुर्-) इति मत्वा वें. =नर्मर- इति असुर-विशेषः तत्संबन्धिनी- इति; सा =नर्मवती- यद्वा नृणां मनसि स्थिता- चेति; BW. GW. GRV. MK. प्रमृ. अभग्ना- इत्यर्थे <न+शर्मिन्- इति कृत्वा विप.> व्यप. इति। [i]) पाठः? *नार्विदाल- > -लान् इति शोधः। शिष्टं *t* टि. द्र.।

[j]) व्यु. अर्थश्च?। < नौ- [तरणि-पर्यायः] इति वें. सा.?; भाप. < √नु इति PW. GW. GRV. प्रमृ.। √*नव् [हिंसायाम्] इत्यस्य भाप. इति मतम्।

[k]) कल्प (यं) नाश्वा° इति पाठः? कल्पयन्, आश्वा- (शु-आ) शु, सु-जुष्ट (पृ-ट) रः इति शोधः।

[l]) नाप. स्त्री. (नासिका-)। व्यु.?। <√अन् (तु. टि. मुस-)। [m]) सपा. नासौ<>नासे इति पाभे.।

[n]) विप.(तु. ऋ ४,३,६ टि.) च व्यप. [द्विवचने (अश्विनौ देवौ [*बुध-शुक्र-ताराद्वयाऽधिष्ठातृभूतौ स्याताम्])]। व्यु.?। (√*नस् [दीप्तौ] [तु. √लस्]>अधिकरणे) *नास- (प्रभात-) इति स्यात्, तदत्यन्तसंयोगात् ( वैतु. या [६,१३] <न+असत्य- इति वा ( √नी [प्रणयने] >) ना- + सत्य- इति वा <नासा- इति वा; Wüst <√नस् [*संयोगे] इति; SEY [१३७] < √नस् [आवर्तने] इति च)। [n])ना° इति स्वरः? यनि. शोधः द्र.।

१३७, २; )|; [९; ८, २२,५]; ११६, २; ९-११; १३; १४; [१६ (११७, १७)]; १७; १९, २०; २२; २३; ११७, १; ६; ११, १३; २३; ११८, [४; ६, ६३, ७]; ११; १८२, ४; १८३, [३; ६, ४९,५], [५,८, ८५, १], १८४, ५; २,४१, ७, ४,१४, १; ४३, [७, ४४, ७],४४,४, ६,६३,७; १०; ७, ६७, ३; ७१, ४; ६, ७२,१; २; [५; ७३,५]; ८, ५,२३; ९, ६; ९; १५; २२,५; २६, २; ५७, १; ४, ८५, ९; १०१,७; १०, ३९, ३; ५; ४१, २; खि १, ३, ५?[a]; ४,२;५;७, ४; मा २०, ८१; ३४, ४७, का २२, ८, २; ३३, २, १०; शौ २०, १४०, १; ४; १४१, ५, १४३,४; ७; -स्याम्याम् ऋ १, २०, ३; ११६, १; ५, ७७, ४; मा १९,८३; का २१, ६, ४; मै ३,११,९; काठ ३८,३; -†स्याय ऋ ४, ३, ६[b]; मै ४, ११, ४; काठ ७,१६; -स्यौ ऋ १०,२४, ५; ६१, १५; -०स्यौ ऋ १, १८२,८; ८,८,१५.

नासा[c]- -से शौ ५,२३,३[d].

नास-तस(:)[e] पै १६,७४,४[f].

?नासि पै १९,३०,१२.

१नासिका[g]- -¶कया ते २, ३,८,२; ६,४,१०, ३; -¶का तै ६, २, ११,४;४,१०,३; मै ४,५,९;६, ३; काठ २५,६[2],२७,८; क ३९, ३[2]; -काभ्याम् ऋ १०, १६३, १[h]; खि ४, १०, ३; तै ७, ३, १६,१; काठ ४३,६; †शौ २, ३३,१[h],२०,९६,१७[h]; पै ४,७, ११†[h]; -काम् ¶तै २,३,८,२[i]; ६,४, १०, ३; मै ३, १५, २[i]; ¶काठ २५, ६; २७,८; क ३९, ३¶; -कायाः काठ २७, ८¶; -के मा २५,२[j]; का २७, २,१[j]; शौ १०,२, ६; ९,१४;१५,१८, ४; पै १६, ५९, ७; १३९, २; १७,२९,९.

नासिक-वत्[j]- -वते तै ७,५,१२,१[k].

नासिका-वत्- -वते काठ ४५,३[k].

२नासिका[l]- -काम्[m] शौ १९, ८,५; पै २०,४६,२.

?नाखगस्य पै १,५९,२.

?नाहीनाम् पै १२,६,५.

नाहुष-, नाहुषी- नहुस्- द्र.

नि ऋ ९, ९८, ५[n]; खि ५,७,४,८; कौ २,५८९†; जै ३, ४८, ६†; पै २,३१,६[o]; ४,६,६; ७, १३, ३; ९, ७, १२[2]; २०, २३, २[o];

) °सु° इति स्वरः? यनि. शोधः द्र.।

') विप. (*ऋक्ष- [तारक-]) इति कृत्वा सस्थ. क्षे इति ?:? (*ऋक्ष->च१) ऋक्षाय इत्येवं शोध्यः। बुधशुक्र-मध्याच् छुकश्चैक इह श्रावितः सन्नुभयोरपि तयोम् द्वाराऽश्विनोश्च देवयोश् चाऽविनाभावसंबन्धात् परामर्शकः । अतः पृ ११८९ क्षा- > क्षे इति कृतचरः सस्थ. ?शो नेष्टः द्र. ( तु. नानादेवप्रकरणं च छन्दश्च; वैतु. ल्पनान्तरकृत] OV [३२८ टि.])।

) नाप. स्त्री. (नासिका-)। (√अन् [प्राणधारणे]> .) *अनस्->*अन(स्य>)स्या->नैप्र. यनि. (तु. नस्-, अन्नत्यं g टि. च, वैतु. पाप्र. नास्->यनि. । [तु इड्->इडा- प्रमृ ], अभा. प्रभृ. < √नास् ब्दे] इति च)। [d]) पाभे. कृते पृ १७९४ l टि. द्र.।

) अनया अपि तसि ह्रस्वः उसं. (पा ६,३,४४)।

) सपा. शौ ९, १३,३ कर्ण-तुस्(:) इति पाभे.।

) नाप. (घ्राणेन्द्रिय-)। व्यु.?। (√अन् [प्राणधारणे]> )*अनास्->अनास्य-> *अनास्य(क>)का-> . *अनासि(क>)का- > यनि. ( तु. नस्- इति नक-वत्- इति च, वैतु. या [७,१७]<√नस् [प्राप्तौ वा नमने वा]; पाप्र. <नासा- इति)।

[h]) सपा. शाश्रौ १६,१३,४ आपमं १, १७,१ शांगृ १, ११,३ पागृ ३,६,२ श्रोत्राभ्याम् इति पाभे.।

[i]) सपा. नासिकाम्<>नासिके इति पाभे.।

[j]) प्राति. ह्रस्वान्तत्वे तु. टि. g, पाप्र [६,३,४४] तु छान्दसो ह्रस्व-विकल्प इति विवेकः।

[k]) सपा. नासिक-वते<>नासिका-वते इति पाभे.।

[l]) भाप. (क्षुन्मथ-शब्द- [छिक्का-])। (√अन् [प्राणधारणे]>करणे) *अनस्- [घ्राण-]+(√नद् [शब्दे] >करणे) *नादिका > उस. *अनस्नादिका-> नैप्र. यनि. (तु. पपा.; वैतु. सा. W. च [पूर्वेण समस्य] यक. पाप-नाशिका इति पाप-नासिका इति च पाठ-शोध इति ?)।

[m]) 'हे पाप (परिक्षव) ! ते (तव [त्वया कृता]) नासिका (क्षुद्-ध्वनिम् [तद्रूपं पापशकुनम्]) अभि (अभिलक्ष्य [तन्निमित्तेन]) मे (मह्यं [मत्-कृते, मत्स्थाने]) शिवा (शृगाली) पुण्यगः (पन्नगः, अन्यो वा तन्नामको जन्तु-विशेषः) हताम् ( "हन्यताम् [भावकर्तरि], माऽहं मृषि)' इति वा.। [n]) स्वाश्र.।

[o]) वा. कृते तु. सस्थ. ?वंस्येव भा इत्यत्र टि.।

५४,६[a].

√निंस्, निंसते[b] ऋ १, १४४, १; निंसते[b] ऋ ९,८५,३; १०, ९२, २; ९४,९; निंसत ऋ १०, ७४, २; निंसीत[c] पै ८,१५,५.

†निंसान- -नम् ऋ ८, ४३, १०; मै १,६,१; काठ ७,१२; क ६,२.

नि(स्>): √कृ, निःकृधि[d] पै १९, १३,७. [=निष्√कृ]

निःकृति- -तिः खि ४,७[e],३[e].

नि(स्>): √क्षि (क्षये) नि:······ क्षिणोमि[f] शौ ६,१४,२.

नि (स्>): √खिद्

निःखिदम्[g] शौ ५,१८,७?[h].

नि √कम्,> कामि, ¶न्यकामयत तै १, ५,१,१; मै२,१,४;४,५,९.

¶नि-कमस् (:) काठ २६, २; क ४०,५.

१नि-काम- -मः शौ १५, ११, २; १०; ११; -मम् शौ १५, ११, १०; -मस्य शौ १५,११,११; -माः ऋ ९,११३,१०; -मे शौ १५, ११, ११; पै ४, १४, २; -मेऽ-मे मा २२, २२; का २४, ८, ३; तै ७, ५, १८, १; मै ३, १२,६; काठ ४५,१४.

निकाम-धरण[i]- -णम् खि ५,७, ३,१०; मै ४,१३,८; काठ १९, १३.

नि-कामयमान- -नः तै १,५,२,२¶.

नि-करण-, नि-कर्तवे, नि-कर्तुम् नि √कृ द्र.

नि √कप्

नि-कपमाण- -णाय तै ७,१,१९,३; काठ ४१,१०.

नि-कपित- -ताय तै ७,१,१९, ३; काठ ४१,१०.

नि-कपिष्यत्- -ष्यते तै ७,१, १९, ३; काठ ४१,१०.

२†नि-काम[j]- -मः ऋ ३, १, १५; ४, १६, १०; १०, ९६, ३; शौ २०, ३०, ३; -मम् ऋ ६,१७, १०; -माः ऋ ९, ९७, ३७; कौ २, ७००; जै ३, ५८, ४; -मासः ऋ १०, २५, ५; -मैः ऋ ४,१६,६; १०, ७३, ६; शौ २०,७७,६.

नि-कामन्[k]- -मभिः ऋ १०,९२,९.

नि-काय[l]- -यः[m] मा १५, ५; का १६,१,७; तै ४, ३, १२, २; क २६,५; -यम्[m] मै २,८,७; काठ १७,६.

नि-कारिन्- नि √कृ द्र.

नि √कि, > चिकीष, निचिकेषि शौ १,१०,२; पै १,९,२; नि··· चिकेथे ५,६६,४.

निचिकाय ऋ १०, ११४, ९; निचिक्यतुः ऋ ८, २५, ९; निचिक्युः ऋ १,१६४,३८;१०, ११४,२; १२४,९; शौ ९, १५, १६; पै १६, ६९, ७; नि··· चिक्युः ऋ १, १६४, ३८; शौ ९,१५,१६; पै १६, ६९,७†.

निचिकीषते ऋ ८, ७८, ६; मा ११,१८; का १२, २, ७; तै ४, १, २, ३; काठ १६, २; निचिकीषति मै २,७,२.

नि-चिक्यत्- -क्यत् ऋ ४, ३८,४; शौ ५,२०,१२; पै ९,२४,१२.

†नि-किल्विष[n]- -षम् ऋ १०,१०९, ७; शौ ५,१७,११; पै९,१५,१०.

नि √कृ,> चिकीर्ष, ?निकृण्मः[o] खि४, ५,३१; निकृण्मः खि ४, ५,३३.

निकरोति तै ३,२,९,७¶; निकुर्वे शौ ७,३९,२; नि (कुरु) ऋ ९, ५२,४.

निचक्रे शौ ७, ३९,२; पै २०, ३०, ७; नि··· चकार ऋ १, १६४, २९; शौ ९, १५, ७; पै १६, ६८, ७; निकर्न् मा २७,४; का २९, १,

a) पूर्वार्ध-पाठः? से त्वा (पृतन्य-> )न्या(:) (आ √इ>) आऽऽयन्, उरुक्ः आ (नि√पत्>लोटि मपु१) निपत तान् अप-क्षितः इति शोधः। b) प्रपु३।

c) निंशीत इति पाठः? यनि. शोधो विमृश्यः।

d) पामे. कृते पृ १७८३ a टि. द्र.।

e) सपा. निःकृतिः<>निष्कृतिः इति पामे.।

f) सपा. नि:···क्षिणोमि<> नि:···कृणोमि<> निः (कृणोमि) इति पामे.।

g) गस.। उप. शक्यार्थे कमुल् प्र.।

h) तु. RW., सपा. पै ९,१७,६ निष्खिदम् इति पामे. [मद.] च; वैतु. शंपा. सात ^०ष्खिदन् इति पाठः? यनि. शोधः। i) विप.। उस. उप. कर्तरि ल्युडन्तम्।

j) विप. (अध्वर्यु-, कुत्स- प्रभृ.)। बस.।

k) =नि-काम-। उप. √कम्>कामि भावे. + कनिन् प्र. उसं. (पाउ १,१५९)।

l) नाप. (छन्दो-विशेष- [तु. माश प्रभृ.])? । व्यु. ?। <नि √कै [शब्दे] इति म., <नि√चि [चयने] इति PW. प्रभृ.।

m) सपा. नि-कायः ( माश ८, ५, २, ५ च )<> निकायम् इति पामे.।

n) अर्थाभावे अस. (पा २,१,६) अन्तोदात्तः।

o) निःस्वरः पाठः?।

४; तै ४,१,७,२; मै २,१२,५; काठ १८, १६; क २९, ४; शौ ७, ८७, ३[a]; निकः ऋ ३, ३३, ८; नि॰ कः ऋ १, ७२, १; तै २,२,१२, १†; नि (कः) तै २, ३, १४, १†; नि ...श्रकरम् शौ ५,२३, ८; नि...करम् ऋ १०, ४९,८; †निकर्म ऋ २,२३,१२; काठ ४,१६.

निचिकीर्षति शौ ११, २, १३; पै १६,१०५,३.

नि-करण- -णम् पै ४,१०,५.

नि-कर्तवे ऋ ८,७८,५.

?नि-कर्तुम्[b] खि ४, ५, २५; शौ १०,१,२६.

नि-कारिन्- -रिणः मा २७,४; का २९, १,४; तै ४,१,७, २; मै २, १२, ५; काठ १८, १६; क २९, ४; शौ ७, ८७, ३; पै ३, ३३,४.

नि-कृ(त>)ता- -ता खि ४,५,३६.

नि-कृति- -तिम् पै १९,२९,१४.

?नि कृण्व तां[c] पै ७,३,१.

¶नि√कृत् (छेदने), निकृन्तते तै २, ५,१,७; निकृन्ततै तै ६, १, १, २; मै ३,६,२; काठ २२,१३.

नि-कृत्वन्[d]- -त्वान. ऋ १०,३४,७.

नि-कृन्तत्- -तन् पै १४,३,५.

नि√कृप्, निकृप पै १९,५१,१४.

नि√कृ(?), निकिरामि[e] पै २,१५,३.

निक्त-, °हस्त- √निज् द्र.

नि√क्रन्द्>क्रन्दि, न्यकन्दयन् ऋ १०,१०२,५.

नि√क्रम्, निक्रामति[f] तै ६, १, ८, १¶[g]; न्यक्रामत् तै २, ६, ७, १¶; न्यक्रामत् शौ ८, १०, २; ४; ६,८;१०;१२; पै १६,१३३, २-७.

†न्यक्रमीत् ऋ ६, ५९, ६; ९, ३६, १; मा ३३, ९३; कौ १, २८१; ४९०; जै १, २९, ९; ५०,४; निक्रमीः ऋ १, ५१,६.

नि-क्रमण- -†णम् ऋ१,१६२,१४; मा २५,३८; का २७, १३,७; तै ४, ६,९,१; मै ३, १६,१; काठ ४६,५; शौ १, ३४,३‡[h]; पै ६, ६,१‡[h]; -णे तै १, ७,२,४[i]¶.

√निक्ष् (वेधने), निक्ष शौ १९,२९, १[j]; पै १२,११,१०[j].

नि√क्ष्विद् (नाशने)

नि-क्ष्विदस्(:)[i] मै ३,२,२¶.

नि√खन्, निखनति ¶काठ ३७, १६; निखनतः तै ६, २, ११, २¶; निखनन्तु[j] पै १९, २७, १०; ¶न्यखनन् तै ६, २, ११, १; मै ३, ८, ८; काठ २५, ९; क ४०, २; शौ ६, १०९, ३$; निखनेत् काठ ३७,१६¶.

निचखान मा ५, २२[k]; का ५, ६, २[k]; तै १, ३, २, १; ६, २, ११, २; मै १,२,१०[k]; काठ २, ११[k]; २५, ९; क २,५[k]; ४०, २; निचख्नुः शौ ५,३१,८; १०, १,१८; पै १६,३६,८.

नि-खनत्- -नन्तः शौ ६, ११६,१; पै १६,४९,७.

नि-खात,ता- -तः तै ६, ३,४,२¶; -तम् ऋ १,११७, ५; १२; ८, ६६,४; ¶तै ६,२, १०, ४; ३, ४,२; ६; ¶मै ३, ८, ९; ९,४; शौ १०, १, १९[k]; -ता तै ६, २,१०,४¶; -ताः शौ १८, २, ३४; १९, ९, ९; -तात् तै ६, ३,४,६¶.

निखात-क[l]- -कः खि ५,१५, १६; शौ २०, १३२, ३; -कम् खि ५, १५,१५; शौ २०,१३२, २.

नि√खिद्, निखिदत् ऋ ४,२८,२.

निखुर्य-पु[m]- -पाय तै ७, ३, १५,१; काठ ४३, ५.

---

a) पाभे. कृते पृ १५४४ c टि. द्र.।

b) पाठः? अति√कृ>अति-कर्तुम् इति शोध. (तु. पृ १०६१ b टि. ⌊उभयत्र प्रतेः पर्यायस्येव सतोऽतेर् न तु तथाऽप्रसिद्धस्य सतः नेर्योगयत्व-सामान्यादिति दिक्⌋)। सपा. खिसा (२९,२५) नी-कर्तुम् इति पाभे.? तस्यापि यनि. शोध. द्र.।

c) अन्यम् श्रासु निकृण्व तां इति पाद-पाठः (अन्यु- + *अमा- ⌊गृह-⌋>) पस. अन्या(न्य-अ)मा-> -मासु (*निष् √कृ ⌊*निवासने⌋>) *निष्कृण्व तान् (श्रामादः) इति शोधः (तु. सस्थ. नि√वह्>निवह इत्यत्र टि.)।

d) विप. (अक्ष-)। उस. कमिबन्तम् उप. (तु. सस्थ. इतराणि विप., वें सा. च; वैतु. PW. GW. GRV. <नि√कृ ⌊न्यक्करणे⌋ इति?)।

e) सपा. निकिरामि<>नितिरामि इति पाभे.।

f) सपा. निक्रामति<>निष्क्रामति इति पाभे.।

g) तु. सस्थ. टि. अनु। h) पाभे. पृ १०२७ d टि. द्र.।

i) गस.। ईश्वरे कसुन् प्र.। j) पाठः? (तु. सपा. शौ ६,१०९,३ न्यखनन् इति पाभे.)। k) सपा. निखातम्<>निपातम् इति पाभे.। l) अल्पार्थे कन् प्र. नित्स्वरश्च।

m) विप. (विष्णु-)। व्यु.?। पपा. यनि. इति। (नि √*खृ ⌊दीप्तौ⌋ >भावे) *नि-खुर्य- (प्रदीप्ति-) + (√पा "*धारणे"=√भृ⌋>कर्तरि) पु->उस. यनि. ⌊*सूर्य-

निग[a]– -गस्य काठ २३,६¶.

नि √गच्छ् [,छ्],गम्, ¶निगच्छति काठ २०,१३;२३,५; २६,८; क ४१, ६; निगच्छन्ति मै १, १०, १९¶; ¶निगच्छन्ति तै ७, २, ४, १; मै १, १०, १९; काठ २०, २; ३६, १३[२]; क ३१,४; †निगच्छात् ऋ १०, १०, ११; १२; शौ १८, १, १२; १४; निगच्छेयुः तै ७,२,४,१¶.

निजगन्थ पै २, २६, १; निजग्मिम[b] पै १९,५१,१.

नि-गत– -तम् शौ १३,४,१२; ५, ७; –तान् ऋ १०,१३२,५.

नि √गल् ( < √गॄ [निगरणे] ) > गलगल्, जलगल्, जल्गुल् निगल्गलीति[c] मा २३,२२; का २५, ६, २; निजल्गलीति[c] काठ ४४, ८; निजल्गुलीति[c] तै ७,४,१९, ३.

नि √गा निगाताम् शौ १२, ३,१४; पै १७, ३७, ४; न्यगुः पै १४, १,१८; †निगास् ऋ १०,१२८, ४; तै ४,७, १४, २; काठ ४०, १०; शौ ५, ३, ४; पै ५, ४,४; २०,५५,७§.

†नि-गुत्[d]– -गुतः ऋ ९, ९७, ५४[d]; १०, १२८, ६[e,f]; तै ४,७,१४, ३[f]; कौ २,४५६; जै ३,३४,१४.

†नैगुत[g]– -तः ऋ ९, २७, ५३; कौ २,४५५; जै ३,३४,१३.

नि √गु(गू)ह्

नि-गूळ्ह, ळ्हा– -ळ्हम् ऋ ६, ४४, २३; –ळ्हाः ऋ १०,१०८,११.

नि √गृह्, ग्रभ्, ¶निगृह्णाति तै ५, ४,६,६; ६, १,९,५[h]; मै ३, ३, ८[२]; काठ २६,१०[२]; क ४१, ८[२]; निगृह्णीतः काठ २८,८; †निगृह्णातु ऋ ४,५७,७; शौ ३, १७,४; पै २,२२,५; न्यगृह्णीत मै ३,७,८¶; निगृह्णीत काठ २९, ३¶; निगृह्णीयात् मै ४,२,९¶.

नि-गृहीत– -तम् मै २,१,२¶.

¶नि-गृहीति– -त्यै काठ २०, ५; क ३१,७.

नि-गृह्य खि २,१६,१; ५, १६, ३; शौ २०,१३२,३.

नि-ग्रभे[i] ऋ ८,२३,३.

नि-ग्राभ[j]– -भः तै ५, ४, ६, ६¶; मै १,१,१३; ३, ३. ८[२]¶; काठ १,१२; १८, ३; २१, ८[२]¶; क २८. ३; –भम् मा १७, ६४; का १८. ५, १५; तै १, १,१३, १; ६,४,२; ४.६, ३, ४; मै ४, ५, ७[२]¶; –भेण मा १७, ६३; का १३, ५, १४; तै १, १,१३, १; ६, ४, २; ४,६,३,४; मै १, १, १३; काठ १, १२; १८, ३; क २८,३.

नि-ग्रा(भ्य > )भ्या[k]– -भ्याः मा ६, ३०; का ६, ८, १; तै ३,१, ८, १; मै १,३, २; ४,५[२],२¶; काठ ३,१०; क २,१७;–भ्याणाम् काठ ३०,७; –भ्याभिः मै ४, ५,५?.

नि √गॄ (निगरणे) निगिरति शौ ५, १८,७.

निगारीत् ऋ ५,४०,७.

नि-गारि(न् > )णी– -णी पै १७, १२,४.

नि √घुप् > घोषि,नि···निघोषयः[l] ऋ ८,५०,८; खि ३,२,८.

---

मूर्ध्यन्तरस्वरूपत्वात्] प्रदीप्त-पर्यायः इति ( तु. सस्थ. टि. निभूय-पु–; वैतु. भा. सा. उस.उप. कर्तरि < √पा [रक्षणे] इति, पूप.[नि √खुर् 'छेदने' > कर्मणि] निखुर– + अर्हार्थे प्र. कृत्वा पापरोगादिभिर्बाध्यमानजन-पर्याय इत्येतस्मिन्नर्थे इति, सा. [तैआ.] =खुरार्ह- इतीव च)। सपा. निखुर्यपाय (तैआ ३, ८,११,२ च ) <> शिपिविष्टाय ( माश ११, १,४,३;४;१२,६,१,१२१३,१,८,८ च) इति पाभे. ।

[a]) नाप. ( वन्दिन्- )। पाठः? । *नि-गड– > -डस्य इति शोधः (तु. मूको., सप्र. मनुः [४, २१०] च) ।

[b]) सपा. कौसू (४२,१७) निजग्मिमः इति पाभे. ।

[c]) सपा. °गल्ग° (माश १३,२,९,६ च) <> °जल्ग° (वैतु. BO. °जल्गु°) <> °जल्गु° <> °चल्च° इति पाभे. ।

[d]) बप्रा.। नाप. (शत्रु-)। व्यु. ?। < नि √*गुद् [हिंसायां] (वैतु.वें.सा. PW.प्रमृ. च < नि √गु [शब्दे] इति ?)। नैप्र. उप. < √*गुत = √कृत् [छेदने] इति,वा. च शोधाय च सस्थ. टि. मुहि च, (√*स्निह् [मदे] > स्नेहि > असेहत् च द्र.)।

[e]) विप. ([पर-] शत्रु-)। अर्थः व्यु. च ?। अग्रथिताः विच्छिन्नसमूहाः सन्त इत्यस्मिन्नर्थे *कान्दिशीकार्थे < नि √*गुत् [ग्रथने] इति (तु. टि. ?निर्ऋथम् [काठ ४०,१०])।

[f]) सपा. निगुतः <> निर्ऋथम् <> निवुता <> प्रबुधा इति पाभे. ।

[g]) नाप. (सोम-)। हननेऽर्थे अण् प्र. उसं. (पा ४,४, १२१ [तु. वें. सा. S. BS. प्रमृ.; वैतु. GW. विप..इति])।

[h]) तु. सस्थ. टि. उप ।

[i]) तुमर्थीयः प्र. ( वैतु. वें. सा. लटि प्रपु१ इति) ।

[j]) गस. उप. घञ् प्र. (पावा ३, ३,३५) थादि-स्वरश्च ।

[k]) विप. > नाप. (अप्-)। गस. ण्यदन्तम् ।

[l]) °घो° इति स्वरः ? यनि. शोधः ।

नि-घोपयत्– -यन् ऋ ८, ५१, ८; खि ३,३,८.

नि-चक्रया[a] ऋ ८,७,२९.

**नि-चङ्कुणं[b]**– •०ण[c] तै १,४, ४५, २[2c]; ६,६,३,४.

?निचय्यांसा[e] खि ५,७,४,७.

**नि √चर्** ९

नि-चर[f]– -राय[g] काठ १७, १२; क २७,२.

नि-चेरु[h]– -रवे[g] मा १६, २०; का १७,२,४; तै ४,५,३,१; मै २, ९, ३; -रुः ऋ १,१८१,५; मा ३, ४८, ८, २७; २०, १८; का ३,५,४; ९, ४, ४; २२, १, ४; तै १,४,४५, २; मै १, ३, ३९; काठ ४, १३; ३८, ५; क ३, ११.

**नि √चल्** >चल्चल्, निचल्चलीति[i] मै ३,१३,१.

**नि √चाय्** (वधा.)

नि-चाय्य– -य्यः[j] खि ४,९,१.

नि-चाय्य, >य्या [ऋ. जै.] ऋ, १, १०५,१८[k]; ३,२६,१; मा[l] ११, १; ११; का[l] १२,१, १; ११; तै ४,१,१,१[l]; मै[l] २, ७, १[2]; ३, १,१; काठ[l] १५, ११; १६, १; कौ १,३६१[l]; जै १, ३८,२.

**नि √चि** (ज्ञाने)

नि-चित्[m]– -तः ऋ २, १२, १३; शौ २०, ३४, १४; पै १३, ७, १४.

नि-चिरु[n]– -रा ऋ ८, २५, ९; खि ५, ७, ४, ७; -राभ्याम् ऋ १, १३६,१; -रासः ऋ ३,९,४.

१नि-चेतृ[o]– -तारा ऋ १, १८४, २.

२नि-चेतृ[p]– -तारः ऋ ७, ५७, २; १०,६१,२७.

**नि-चिक्यत्**– नि √कि द्र.

**नि-चुङ्कुण[q]**– -०ण[c] मै १, ३, ३९; ४,८,५; काठ ४, १३; २९, ३; ३८, ५; -ण.[d] मै १, ३, ३९; काठ ४,१३; ३८,५.

**नि √चुद्**, >चोदि, निचोदय ऋ ८, २४,२५.

---

[a]) भाप. (रथोपकरणेकेतरगति-)। 'चक्रेण सम्पन्ना- (√या > भावे) या– [गति-]' > *चक्र-या इति उप. इति च, *नि (=न) इति पूप. इति च कृत्वा तस.। पूप. नञ्-धर्मातिदेशपूर्वं स्वरः उसं (पा ६, २,१)। 'चक्र- [=रथ-] निरपेक्षया गत्या' इति कृत्वा यनि. तृ१ वा. क्रिवि. द्र. (तु. [तात्पर्ये] MW. GRV. च; वैतु सा. नि इति निम्नार्थे नि. पूप. इति कृत्वा नि-चक्रा–>इति रथकत्या- इत्यर्थे नाप > यनि. इति, वें. नियमार्थे मत्वा सेना-परं नाप. यद्वा व्याप. [पुरी-विशेष-] इति, BW. GRV. नि [=न] + चक्र–>बस. यनि. क्रिवि. इति)।

[b]) विप. ([*निक्षरण-संपाद्य-] अवभृथ-)। व्यु.?। नीच– + √क्वण् [शब्दे] इति या [५,१८] भा. प्रभृ. ?WAG [१,१७४ b]; <नि √क्वण्>चङ्कुण्, चुङ्कुण् [शब्दे] इतीव कृत्वा नाप. ओघ-पर्याय इति BW. MW. K.। (नि √क्षर् >*निक्षर्म [न्]–>) *निक्षर्म-वत्– (यथा स्यात्तथा) + (√कृ [कृतौ] >कर्मणि) *कर्मण–> उस. *निक्षर्मवत्-कर्मण– >नैप्र. यनि. इति नु स्यात्। निचुङ्कुण–, निचुम्पुण– इत्येते प्राति. एतत्-पर्याये सती यद्र.।

[c]) सपा. निचङ्कुण (तैब्रा २,६,६,३ आपश्री १३,९, १०; १९,१०,५ च) <>निचुङ्कुण (माश्री २,५, ४, ३०च) <>निचुम्पुण (माश २,५,२,४७,४,४,५,२२; १२,९,२,४ लाश्री २,१२,९ या ५,१८ च) इति पाभे.।

[d]) मरुत् सपा. निचङ्कुण (तैब्रा २, ६, ६,३ च) <>निचुङ्कुणः <>निचुम्पुणः (माश. लाश्री. [c टि. द्र.] च) इति पाभे.।

[e]) विप. (मित्रावरुण-)। पाठः? निचिकिवांसा वा निचिक्याना वेति C. (शाश्री ७,२,६) शोधः (तु. सपा. ऋ ८,२५,९ निचिक्यतुः इति पाभे.)।

[f]) विप. (रुद्र-)। गस.।

[g]) सपा. निचराय <>निचेरवे इति पाभे.।

[h]) विप. (अवभृथ-, ककुह-, रुद्र-)। गस. उप. कुः प्र. लिङ्वद्भावश्च उसं. (पा ३,२,१७१)।

[i]) पाभे. कृते पृ १७९८ c टि द्र.।

[j]) सपा. निचाय्यः <>निचाय्य इति पाभे.।

[k]) धा. अभिकाङ्क्षायाम् वृत्तिरिति Foy [KZ ३५, १३१]।

[l]) वैतु. विव. किप. इति।

[m]) विप. (इन्द्र-) गस.। कर्मणि क्तान्ते अन्तोदात्तः उसं. (पा ६,२,१४७), वैतु. सा. [पक्षे] नि √चि [चयने]।

[n]) विप. ([निचक्षण-शील–] देव–, मित्रावरुण-)। उप. रक् प्र. उसं. (पाउ २,१३ [तु. PW. GW. GRN. प्रभृ.]; वैतु. वें. सा. प्रभृ. प्रास. उप. चिर [अव्य.] इति)।

[o]) विप. (अश्विन्-)। गस. तृन्नन्ते ग. स्वरः।

[p]) विप. (देव-मरुत्-)। गस. तृजन्तम् उप.।

[q]) =नि-चङ्कुण–।

नि-चुम्पुण[a]– -०ण[b] मा ३, ४८; ८, २७; २०, १८; का ३,५, ४; ९, ४, ४; २२, १, ४; क ३, ११; –णः ऋ८,९३,२२; मा[c] ३,४८; ८,२७; २०,१८; का[c] ३, ५,४; ९,४,४; २२,१,४; क ३,११.
नि-चेरु– नि √चर् द्र.
√निज्, नेनिक्ते ऋ ९,७१,३; ?निजमहे[d] पै १,१११,३; निनिक्त ऋ १०, १३२,६.
?निज्य[e] पै ५,३१,२.
†निक्त– -क्तः ऋ ८,२,२; ९,१०९, १०; कौ १,४३०; २,८५;६८२; जै १,४२, ४; ३, ८, ११; ५५, ९[f]; ५६, १०; –क्तम् ऋ ९, ६९,४; कौ २,७२२; जै ३,५९, १४; –क्तैः ऋ ९, ९३, ३; कौ २,७७०.
निक्त-हस्त[g]– -स्तः ऋ४,४५,५.
नि √जन्[h], ?निजनानि[i] पै १९,३७, १०.
१नि-ज[j]– -जः शौ ३,५,२.
?२निज[k]– -जः मै १,६,११.
?निजरीरिप्याथो[l] पै १६, ८७,८.
नि √जस्, > जासि, निजस्यति पै ४,१६,६; निजस्यात् पै ४,१६, २; निजस्यत ऋ १, १९१, ७; पै ५,३,३; ९,६,७†.
निजजास शौ ५,१३,१.
?निजासयामसि पै ४,१६,६.
?निजीनांसि[m] पै ८,१५,४.
†नि-जुर[n]– -जुरः ऋ २, २९,६; मा ३३, ५१; का ३२,४,८; मै ४, १२,६.
नि √जूर्व्, †निजूर्वति ऋ १०, १८७, ३; शौ ६,३४, ३; पै १९, ४५, ४; †निजूर्वथः ऋ ७, १०४, ४; शौ ८, ४, ४; पै १६, ९, ५; निजूर्वाः ऋ २, ३०, ५; निजूर्वात् ऋ २, ११, १०; निजूर्व ऋ ६,६,६.
†नि-जूर्वत्– -र्वन् ऋ ४, ७, ११; काठ ७,१६; शौ ६, ५२, १‡[o]; पै १९,७,५‡[o,p].
निणिज्[q]– -णिक् ऋ ४,५,८.

---

[a]) अवभृथ- [भा. प्रमृ.] इत्यस्य विप. सत् =निचङ्कुण– इत्यनेन सव्युत्पत्तिकं द्र.; सोम- [ऋ.] इत्यस्य च विप. सत् <नि √चम् + √पृण् ([ >पुण् ] तर्पणे प्रीतौ च) इति या [५,१८] वें. सा. प्रमृ.।
[b]) पाभे. क्रते पृ १७९९ *c* टि. द्र.।
[c]) पाभे. क्रते पृ १७९९ *d* टि. द्र.।
[d]) पाठः? नेनिज्महे इति शोधः।
[e]) पाठः (=कौसू ६२,२१)?।
[f]) सपा. निक्तः <> मृष्टः इति पाभे.।
[g]) विप. (अध्वर्यु-)। बस.।
[h]) धा. हिंसायां वृत्तिरिति कृत्वाऽस्य √हन्, √*धन् (तु. नि-धन– [मृत्यु-]) इत्येताभ्यां साजात्यं च √जन् [प्रादुर्भावे] इत्यनेन वैजात्यं च द्र.।
[i]) पाठः? निजनानि (लोटि उपु१) इति स्वर-शोधः।
[j]) नाप. (निहन्तृ-)। कर्तरि डः प्र. (वैतु. विप. इति कृत्वा सा. अनन्यसहाय-पर्याय इति, PW. W. B. प्रमृ. धा. प्रादुर्भावे वृत्तिरिति कृत्वा बद्धमूल-पर्याय इति।
[k]) पाठः? न + (√निज् [ शुद्धौ ] > कर्तरि) *निज– >तस. *अ-निज– (अशुद्ध-)> -जः इति शोधः (तु. सात.; वैतु. Sch. निजः इति)। 'यथाऽशुद्धः सन्नपि वृषलः पुल्कसः चिकित्सेत् (रोगमपाकुर्यात्) एवं भ्राष्ट्रजोऽपि सन्नसौ वह्निः सम्यक् समर्थः (स्यात्)' इति सा.।
[l]) पाठः? (नि √जॄ [जरायां]-भावे) *नि-जरि– > -रिः, (√रिप् [हिंसायां] भावे) *रिप्या– > -प्या, अथो इति त्रिपदः शोधः।
[m]) पाठः? *निजै(ज-ए)नस्– >-नांसि (न. द्वि३) इति शोधः। अत्र ३*निज– (आत्मीय-) इति पूप. द्र.।
[n]) भाप. हिंसा-(तु. वें. सा. GW. प्रमृ.; वैतु. उ. म. [बुभुक्षित-], ORN. प्रमृ. विप. [वृक-] इति)। गस. उप. < √जुर् [हिंसायाम्; वैतु. ORN. ज्वलने]। ?GRV. Aufrecht [KZ २७, ६०९-१०] निगुरः [निगरणात्] इति शोध इतीव?।
[o]) पाभे. क्रते पृ १३८७ *f* टि. द्र.।
[p]) निजूर्वत् इति पाठः? यनि. शोधः।
[q]) भाप. न. (*तेजस्-)। व्यु.?। पपा. नावग्रहः। नैप्र. <निर्णिज्– (रूप- [तु. निघ ३, ७])। '(यमग्निं प्रभाते प्रज्वालनात् प्राग्) गुहायां हितं (गुप्तं) निणिक् (तेजः [इव सन्तं]) उपवदन्ति (स्तुवन्ति [कवयः], यश्च) वेः [*प्रातः] यत् [यदा] उस्रियाणां [उषसां] वार् [*आवरणम्] इव अप-व्रन् [अपाकुर्वन्ति देवा इति शेषः] रूपः (*रूपवान् [सन्, यज्ञकर्मणि]) प्रियम् अग्रं (अग्र्यं) पदं पाति (अधिकरोति, स एवाऽग्निः) मेऽस्य वचसः प्रवाच्यं स्यात्' इति वा. इति कृत्वा १मे पादे यः प्रश्नो भवति, मन्त्रशेषे तस्योत्तरमुक्तं स्यात् (वैतु. वें. सा. चीरार्थे नाप. सत् <निर् √निज् [शुद्धौ] इति; WAG [१,१५२ *a*; १७४ *b*] अप्रकाशार्थे क्रिवि. सत् <निर् √नी इति;

†निण्यु[a]– -ण्यः ऋ १,१६४,३७; शौ ९, १५, १५; पै १६, ६९, ६; -ण्यम् ऋ १,३२,१०;९५,४,४, १६,३; ७,३३,९; शौ २०,७७, ३; पै ८,१४, ४; १३, ६, १०; -ण्या ऋ ४,३,१६[b];७,५६,४; -ण्यानि ऋ ७,६१,५; -ण्ये ऋ ९,९२,४; -ण्योः[c] १०, ५,१.

'नितततपम्[d] काठ १२,१०¶.

नि√तन्, नितनोषि पै ५, ३०, ३; नि...तनोतु शौ ३, १२, ४; पै ३,२०,४, नितन्वनाम् पै १५, २२,७; नि...तनु शौ ७,९५,३. नितताप ऋ १०,१११,४. नि-तनिन्,त्नी[e]– -०त्नि शौ ६,१३६, १; पै १, ६७, १; -त्नि. तै ४, ४,५,१; पै ७[f], ५, ६; ७; २०, ३७,४; -त्निना पै २०,३७, ५; -त्नी मै २,८,१३; काठ ४०,४. नि-तान[g]– -नः[h] मै १,२,११;३,८, ९; काठ २,१२; २५,१०[i];¶[i]; क २, ६; ४०, ३[i]; ¶[i]; -नाः शौ ६,१३९,१[j].

नि√तप्

नि-तप्त– -प्तन् शौ १९,२८,३.

नि√तम्>तमि, ¶नितमयन्ति काठ २४,९; क ३८,२.

नि√तिज्

नि-तिक्त– -क्ताः ऋ १०,१११,९.

नि-तिक्ति[j]– -क्ति ऋ ६,४,५.

नि√तुद्

नि-तुद्(त्>)न्ती– -न्तीम् शौ ५, ७,७; पै ७,९,७[k].

नि-तोदिन्[l]– -दिनः ऋ १०, ३४, ७; शौ ७, ९५, ३; पै २०,२९, ३; -दिनौ शौ ७,१००,२.

नि√तुन्द्, नितुन्दते ऋ १,५८,१[m].

†नि√तुश्>तोशि, नितोशते ऋ ९, १०९,२२; नितोशसे ऋ ९,६३, २३; कौ २,५८६[n]; जै ३,४८,२. नितोशे[o] ऋ ४,३८,१. नितोशय ऋ ८, ५४,८; खि ३, ६,८[p].

?नि-तोश्]

नैतोश[q]– -शा ऋ १०,१०६,६.

GW. GRV. L[४५६,४६१], OV. प्रमृ.;<नि + नि [.>णि] √अच् [गतौ] इति;GW. [पक्षे] < नि + नि √अज् इत्यपि)।

[a]) विप. च, नाप च, वा. किवि. च। अर्थः व्यु. च?। पपा. नावग्रहः। निर् इति ग 'निषेधे' इति कृत्वा निघ (३,२५ [तु. या ३,१९]) <निर् √निज् [दीप्तौ] इतीव; निर् इति 'अतिशये' ग. इति कृत्वा < निर् √नम् [नमने] इति या[२,१६]; <निर् √नी [प्रापणे] इति दे.L[३९२] WAG [१,१७२ a]MVG[४७ f]। <निर् √नी ('*दीप्तौ' [तु. ऋ १, ९५, ४] वा '*बन्धने' [तु. ऋ १,३२,१० प्रमृ.]) वेति च निर् इति'अतिशये' ग. इति च स्यादिति मतम्।

[b]) विप. ([निर्व्यक्त-] वचस्-)। व्यु.?। निर् √मन् [अभ्यासे =*प्रमापणे] > निर्-मण्यु- > नैप्र. यनि. (वैतु. वें. सा. प्रमृ. अन्यथा व्युत्पादुकाः)।

[c]) निण्युयोः वर >नैप्र. यनि. (तु. मुनेः प्रमृ.); वैतु. सा.(पक्षे) निण्यु– (अन्तरिक्ष-)>षा इति।

[d]) अव्य. (कलविङ्क-पक्षिणः) शब्दानुकृतिः। °पम् इति MW. शोधार्हः।

[e]) नाप. (कृत्तिकेष्टका-विशेष- इति, शौ. पै. च ओषधि-विशेष- इति)। गस. किः प्र. उसं. (पा ३,२,१७१)।

[f]) नितत्नि: इति पाठः? यनि. शोधः।

[g]) विप. [*नि-बध्नान- (मारुत- [तु. उ. म.; वैतु. PW. प्रमृ. तन्नामा कश्चिद् इति कृत्वा व्यप. इति])]। धा. बन्धने वृत्तिः। (*अधि√बध्>) *अधि-बधान–> -नः इति तत्र शोधः स्यात्। यद्वा √तुत् [*बन्धने] इत्यस्य कृद्वृत्तमित्यास्थेयम् (तु. निहन्तु [मै १, २, ११], मिनोतु [मा ५, २७] इत्यत्र टि., वैतु. उ. म. धा. दीप्तौ वृत्तिरिति?)।

[h]) पाभे. कृते पृ १६७२ k टि. द्र.।

[i]) नाप. (न्यक्-प्रशाखा-)। धा. विरोहणे वृत्तिः।

[j]) भाप.। वा. किवि. (वैतु सा. लटि प्रपु१ इति?)।

[k]) नुत° इति पाठः? यनि. शोधः (तु. शौ.)।

[l]) विप. (२अक्ष-, गृध्र-, शाङ्कुर-)। गस. उप. णिनि. प्र.

[m]) धा. *पूरणे वृत्तिरिति कृत्वा देवेभ्यः प्रदानार्थं हव्येन नितरां भरितो भवतीत्यर्थः (वैतु वें. सा. धा. गतौ वृत्तिरिति, सा. [पक्षे] GW. GRV. OV. प्रमृ. =√तुद् [व्यथने] इति?)। अत्र नि इति पाठः? इति कृत्वा नु इति पृथग् अव्य. इति शोध इतीव Aufrecht (KZ २५,४३५ [तु. MW.]), नि (=नञर्थे वृत्तिः)√तन्द् इति शोध इति OV [पक्षान्तरे]।

[n]) °तोष° इति S. पाठः।

[o]) लिटि प्रपु१ (तु. वें. सा. ORN.)।

[p]) नितोषय इति पाठः? यनि. शोधः (तु. ऋ.)।

[q]) अर्थः व्यु च?। विप. ([दानशील-] अश्विन्-)। मतुबर्थीयः अण् प्र. उसं. (तु. वें.[PW. GW. प्रमृ.; वैतु. या [१३,५]सा. व्यप. अपत्यार्थीयः प्र. इति)।

†नि-तोशन[a]– -नम् ऋ ६, १, ८; १०,६०,२; मै ४,१३, ६; काठ १८,२०; –ना ऋ ८,२५,२३[b]; –नासः ऋ ७,९२,४.

नितूलंभष्ठ[c]– -क्षम् पै ६,१४, ९.

नि √तृद्, नितृणद्मि शौ १९,३२,४; पै १२,४,४; नितृन्द्धि शौ ५, २९,४; पै १३,९,५.

नि √तृम्प्, नितृम्पसि ऋ ८,७०,१०.

नि √तृह्

नि-तर्हण– -णेन पै २,८४,१-११.

नि √तॄ, नितिरामि शौ २, ३१, ३; नि···तिरामि, नि[2]( तिरामि ) शौ ६, १३१, १; नि···तिर ऋ ८,३२,३; ९, १९,७; नि(तिर) ऋ ९,१९,७.

नि···अतारीत् मै २, ६, १२[d]; काठ १५,८[d]; नितारीत् ऋ १, १५२,३[e];२,२०,८; पै १६,६९, १२†[e]; नितारिषः ऋ ९,७९,५.

नि-तोदिन्– नि √तुद् द्र.

?नि-तोशिं– नि √तुश् द्र.

†नित्य,त्या[f]– -त्यः ऋ १, ६६,१;३; १४०, ७; १४१, २; ३, २५, ५; ७,१,२; ८८,६; १०, १२, २; ३१, ४; काठ ३९, १५; कौ २, ७२४; जै ३, ५९, १७; शौ १८,१,३०; –त्यम् ऋ १, ७१, १; ७३, ४; १६६,२; १८५,२; ३,१५,२; ५३, २४; ५, १, ७; ८५,७; ७,१, १२; ८, ४, १८; ९, ९२, ३; १०, ३९, १४; खि २, ६[1], २७; ३, १७[2], २; ४, २,१४; मै ४, १४, १; पै ४, १६, ७§; –त्यया ऋ ८, ३१, ५; ७५, ६; तै २,६,११,२; मै ४,११,६; काठ ७,१७; –त्यस्य ऋ ४,४१,[१०;७,४,७]; पै २०, १, ३§; –त्या ऋ ७, १, १७; –त्याः ऋ २, २७, १२; –त्यात् ऋ ८, ५६, २; खि ३, ८, २; –त्यासः ऋ १, १४८, ५; ५,६, १; मा १५,४१; का १६,५,२३; मै २,१३,७; काठ ३९,१४; कौ १,४२५; २,१०८७; जै १,४१, ७; –त्ये ऋ १, १४८,३; २,२, ११;७, १,२१; –त्येन ऋ ४,४, १७ (६, ५,५ )]; तै १, २, १४, ३; मै ४, ११, ५; काठ ६,११.

नित्य-पु( ष्ट>)ष्टा– -ष्टाम् खि २, ६,१,९[g].

नित्य-व(त्स>)त्सा[h]– -त्साः पै ७, ६, ७; –त्साम् शौ ७, १०९, १[i]; ९,४,२१; पै १६, २६, १.

†नित्य-स्तोत्र[j]– -त्रः ऋ ९, १२ [(१, ९१,६) ७]; कौ २,५५२; जै ३, ४३,८.

?नित्य-होतृ[k]– -ता ऋ १०, ७,४; –तारम् मै १, १,१२‡.

नित्या(त्य-अ)रि(त्र>)त्रा[l]– -त्राम् ऋ १,१४०,१२.

√निद्,न्द्,> निनित्स, निन्दति मै २,७,१०‡[m]; काठ १६,१०‡[m]; ३४, ५[2]¶; निन्दन्ति ऋ १०, ४८, ७; निन्दिम ऋ १, १६१, १; निन्दात् ऋ ५,४२,१०; मा ११,८०; का १२,७,१५; तै ४, १,१०,३; मै २,७,७; काठ १६, ७; १९,१०; क ३०,८; निन्दत ऋ ४,५,२.

निनिदुः ऋ १०,२७,६; ‡निन्दिपत्[n] शौ २,१२,६; पै २, ५,६; अनिन्दिषुः ऋ १,१६१,५.

निनित्सति खि ५,१२,२[o]; निनित्ससि खि ५, १५, ४[p]; निनित्सात् ऋ ६,५२,२[n].

†निद्[q]– निदः ऋ १, ४, ५; शौ २०, ६८, ५; निदः ऋ १, २४,

---

[a]) विप. (रथ-, वायु-प्रमृ.)। गस. उप. कर्तरि ल्युट् प्र. ।

[b]) वैतु. GW. माप. इति ।

[c]) व्यप. (रक्षो-विशेष-) । व्यु. ? ।

[d]) सपा. नि ···अतारीत् <> वि···अतारीत् (तैब्रा १,७,४,२ च) इति पाभे. ।

[e]) सपा. नितारीत् <> निपाति इति पाभे. ।

[f]) विप. (ध्रुव-) । व्यु. ? । पपा. नावग्रहः । < नि + त्यप् प्र. इति (पावा ४, २,१०४) ।

[g]) विप. (श्री-) बस. । °ष्टम्° इति स्वरः? यनि. शोधः ।

[h]) विप. (धेनु-) । बस. ।

[i]) पाभे. कृते पृ १०४५ g टि. द्र. तत्र धेनुम् पुराम् इति शोधः द्र. ।

[j]) विप. (सोम-) । बस. ।

[k]) नित्य-होत्र-कृदर्थे विप. । *नित्य-होत्र- बस. इत्यस्यैव प्राति. श्रेयः सत् तत्तथा शोध्यं स्यात् ( तु. सपा मै. पठितस्य सतः °होतारम् इत्यस्य स्थाने ऋ [५,२६,३] वीति-होत्रम् इति पाभे.; वैतु. मैं सा. GW. GKV. प्रमृ. यनि. एव प्राति. इति च कल. इति च ?) ।

[l]) विप. (नौ-) । बस. ।

[m]) सपा. निन्दति <> प्रीयति (माश ६,८,२,९ या ३,२० च) इति पाभे. ।

[n]) सपा. निन्दिषत् <> निनित्सात् इति पाभे. ।

[o]) पाभे. कृते पृ १७४८ t टि. द्र. ।

[p]) पाभे. कृते पृ ७५४ g टि. द्र. ।

[q]) माप. च नाप. च । क्विबन्तम् ।

४; १२९,६; २, ३४, १५; ४, ४, १५; ५, ५३, १४; ८७, ६; ९; ६,१४, ५; ६१, ११; ७२, १; ७,१६,८; ८,७८,६; ९,२९, ५; ६१, ३०; ७०, १०; तै १, २,१४, ६; मै ४, ११, ५; काठ ६, ११; कौ २, १३०; जै ३, १३, ६; निद्मऽनिदम् ऋ ९, ७९,५; निदे ऋ २,२३,१४;३४, १०; ३, १६, ५; ४१, [६; ६, ४५, २७]; ७, ३१, ५;७५, ८; ९४, [३; ८, ८, १३]; कौ २, २६८; जै ३, २२,१५; शौ २०, १८,५, २३,६.

निदा– -दायाः ऋ ६, १२, ६.

निद्यमान– -नान् ऋ ६, ५२,३.

निनित्सु– -त्सुः ऋ ८, ६८, १९; -त्सोः ऋ १, १८९,६; ७, २५, २; ३४,१२.

निन्दत्– -न्दते पै १०,१,४.

निन्दा– -न्दाः शौ ११, १०, २२; पै १६,८७,२.

निन्दित॑– -तेषु पै २, ३१,४.

निन्दिता(तृ-अ)श्व[a]– -श्वः ऋ ८, १,३०.

निन्दितृ– -ता ऋ ३,३९,४; -तारः ऋ ५, २,६.

निन्द्य– -न्द्यास॑ ऋ ५, २,६.

?निदत्स्वाम् पै १६,९६,७.

नि-दुधत्–,φनि-दुधान– नि √धा द्र.

नि √दह्, निदहाति ऋ १, ९९, १; खि ४, २,६; †नि···दह ऋ ८, २३, १४; कौ १, १०६; जै १, ११, १०; नि (*दह)[b] ऋ ८, ३९,२[२]; निदहेयुः मै ३, ८,२¶. निधक्षि ऋ ६, १८, १०.

नि-दाघ[c]–

नैदाघ[d]– -घः, -घम् शौ ९, ५, ३१.

नी-दाघ[c]–

नीदाघ्य[d]– -घ्ये पै २०,४०,९.

नि √दा(दाने), नि···ददातु पै ७,६,९. निददौ पै ५,९,५.

१निदान[e]– -नाः ऋ ४,५,१२.

¶नि √दिश्, निदिशति काठ २७, १[२]; क ४२,१[२].

नि √दी > दिदी (दीप्तौ), निदिदीहि ऋ १,११३,१७.

निदीध्यत् नि √धी द्र.

नि √दुह्, निधुक्ष्व पै ६,२२,११.

नि √दो > दा (बधा.)

नि-दातृ– -तारम् ऋ ८,७२,५[f].

२नि-दान– -नम् ऋ ६, ३२,२[g]; १०, ११४,२[h]; १३०,३[i]; ¶तै[h] ६, ५, ११, २[२]; ३; काठ २०, ९¶; क ३१, ११¶.

¶निदान-वत्– -वत्तः काठ २८, १०; ३०,७; क ४५, १; -वन्तः मै ४, ६, १; काठ २८, १०; क ४५, १; -वान् तै ६,५, ११, २; ३; मै ४, ६, १; काठ २०, ९[२]; २८, १०;३०, ७; क ३१,११; ४५,१.

नि-दित[i]– -तम् ऋ ५, २, ७; -ता ऋ ८,१०३,११.

?निद्यानि[j] पै १७,२९,८.

?निद्रा[k] ऋ ८,४८,१४.

नि √द्रु, निद्रवन्तु पै २,५५,५.

नि √धन् (बधा.)

नि-धन[l]– -नम् खि ७,७, ५; तै ३,३, २, १; ¶६,६, २,१; २; शौ ९, १०, २; ३; ५[२]; ७[२]; ९;

---

[a]) विप. > व्यप. (नृप-विशेप-) इति वें. GW. प्रभृ. । बस. । [b]) तु. वें. सा. ।

[c]) नाप. (ग्रीष्म-)। गस. उप. घञन्त उपसर्गस्य वैकल्पिको दीर्घः । [d]) नाप. (ऋतु-)। तस्येदमर्थीयौ अण्-यतौ प्र. यथायथं द्र. ।

[e]) विप. (*[अजानत्-] अस्मद्-)। व्यु.?। पपा. नावग्रहः। नि (=न) + ध्यान- (ज्ञान-) > बस. (नौ नञ्-धर्मातिदेशे सति) *नि-ध्यान– > नैप्र. यनि. । 'यत् परमं सत् रेकु (*गुप्तं) पदं (*धर्म) न (इव) निदानाः अगन्म (प्राप्ता अभूम)' इति वा. (वैतु. अन्ये <√निद् [निन्दायाम्] + [कर्तरि वा कर्मणि वा] शानच् प्र. इतीव?)।

[f]) धा. 'बन्धने' वृत्तिः ।

[g]) नाप. [बन्धन-साधन-, रज्ज्वादि- (तु. सा. PW. GW. GRV. प्रभृ.; वैतु. Roth. [ZDMG ४८, १०९] निधानम् [<नि√धा 'बन्धने'] इति शोधुकः)]।

[h]) नाप. (मूल-कारण-)। धा. वृद्धौ [जन्मनि] वृत्तिः ।

[i]) नाप. (*स्तोम-)। धा. स्तुतौ वृत्तिः ।

[j]) अत्र BKA. अनिन्दयन् इति ।

[k]) निर्देशः? (√निद् [निन्दायाम्] > भावे) निद्– + (√रास [शब्दे] > कर्तरि) *रास– > उस. *निद्-रास– > -द्राः [निन्दकः (तु. सस्थ. जल्पिः इत्येतत्-पर्यायः [अत्र विषये पृ १३६५ c टि. शोध्यं द्र.])] इति स्यात् (वैतु. नि-द्रा इति पपा., अन्ये च तदनु नि √द्रा [स्वप्ने] इत्यस्यैवोत्सूत्रं किमपि वृत्तमितीव?)।

[l]) भाप. (?मरण- [तु. खि ७,७,५]; ?भारो बाधनं वा [तु. शौ १२, १, ४८]) च। [धा. शब्दे वृत्तिं कृत्वा] स्वरनिरोधात्मके सामभक्तिविशेषार्थे नाप. इति। वैतु. पाउ [२,८१] प्रभृ. <नि √धा इति?।

१०; १२,१८; ११,६,१२; १२, १,४८; ५, ३; पै १६, ८३, २; ११५, १[२]–४[२]; १३९, १९; १४०,३; १७,५,६; –नेन मै २, १३,४.

निध्रुन-वत्– -वत् मा १३, ५८; का १४, ७, १०; तै ४, ३,२,३; मै २,७,१९; काठ १६, १९; क २५, ९; –वतः मा १३, ५८; का १४, ७, १०; तै ४,३,२,३; मै २,७,१९; काठ १६, १९; क २५,९.

नि√धा, †निधातु ऋ १०, ११, २; शौ १८,१,१९; २०,१२,६.

निधत्ते[a] तै ६,१,८, ५¶; निधत्ते ऋ १, १२२, ९; १२५, १; तै ५, ६, ८, ४¶; ¶मै १,५,११; ३, २, ३; ७; ३, ९[b]; ¶काठ २२, ७; २८, ५; ¶क ३५, १; ४४,५; पै ८,१५,४; नि···धत्ते ऋ ५,२८, २; निदधाति ऋ १, १४६,२; ३, ५५, १७; ६,२८, २[b]; ¶तै ५,१,६,४; ८, १; ४, ६, ५; ६, २, १०, ५; ¶मै १, १०, १५; १८[c]; २, २, ३; ३, २,४; ७, २; ७; ९, ७; ¶काठ २०, ८; ३६, १३[d]; ३७, १६; क ३१,१०; शौ ४, २१,२†; ६, ७६, ३[e]; निदधति काठ २९, ८; ¶नि ···दधति काठ ११, १०; †निदध>धा[d] ऋ ८,१०२, १४; काठ ४०, १४; कौ २, ९२१; जै ४, ६, ६; निदधे मा १५,४९; का १६, ६, १; तै ४, ७,१३, ३; मै २, ७, १६; १२, ४; काठ १८, १८; ३९, ३; क २९, ६; शौ ५, ९, ७[e]; ११, १, २८; ३३; पै ५, ४०, ६; १६, ९१, ८; ९२, ३; नि ··· दधे ऋ ३, २३, ४[f]; मा ३, ५०[g]; तै १,८, ४, १[g]; काठ ९,५[g]; क ८,८[g]; निदधामि मा ३५, ६; का ३५, ४, ५; नि ··· दधामि खि १, २, १०; निदध्मः शौ १२,१,३०; पै १७, ३,११; निदध्मसि ऋ १, ५०, १२; शौ १, २२, ४†; ३, २३, १; ५,२१,१; ८,१, २१; १४, २, ६५; ६९; पै १,२८,४; ५, १९,७; १८, १३, ४; १९, ८, ११[h]; ३०, ३; नि···दधते[i] ऋ ९, ६८, २; निदधसि पै १९, ३६, १६; निदधातु शौ ८, ५, २१; पै १६, २८, १०; १९, १५, १४[c]; निधेहि ऋ १, २८, ९; ४३,७[j]; मा १६, १२; का १७,१,११; तै ४, ५, १, ४; मै २,९, २; ४, ९, ६[k]; काठ १७, ११; क २७,१; शौ १२,१,६३; पै १४, २, १६; १७, ६, ८; नि···धेहि मा ३, ५०; का ३, ६,२; तै १, ८,४,१; मै १,१०, २; काठ ९, ५; क ८, ८; निधत्तात्[l] मै ४,१३,४; नि···धत्तम् जै २, १, ५; शौ ४, २८, ६; नि···दधिध्वम् ऋ १०, १०१, ११; कौ १, ६३‡[m]; जै १,७, १‡[m]; निधत्त तै ५, ६,१, २[n]; मै २, १३, १[n]; पै १, २९, ४; नि···धत्त ऋ १, १७१, १; †नि··· दधात>ता ऋ ५, २२, [२; २६, ७]; मै ४, ११, १; काठ २, १४; नि[o]···धात ऋ ६,६५, ३; नि···धत्तन ऋ १०, ३०,१४; निधेतन ऋ १०, ३७, १२; निदधानि ऋ १०, ११९, ९; ¶न्यधत्त तै ५, ७,६,६; ६, ६, ८, २[p]; ¶न्यदधात् तै ६, १, ३,७; मै १, ६, ६; काठ ६, २; ३;७; क ४, १; २;६; शौ १०,२,१७§[q]; ¶न्यदधत तै १, ५,१,१; ५, ५, ३, ३; मै ४,४, ९; काठ ३७, १६; न्यदधुः तै ६,४,९,२¶; ¶मै १, १०, १६;

---

[a]) निधत्ते इति स्वरहीनः पाठः? यनि. शोधः (तु. पूर्वं स्थलम्)।

[b]) वैतु. GW. उप···निदधाति इति?।

[c]) सपा. निदधाति<>निदधातु इति पाभे.।

[d]) लटि प्रभुरे रूपम्।

[e]) सपा. निदधे<>परिददे इति पाभे.।

[f]) तु. सस्थ. टि. आ।

[g]) सपा. नि···दधे (माश २,५,३,१९ आश्रौ २,१८, १३ च)<>नि···दधौ इति पाभे.।

[h]) सपा. निदध्मसि< >उपास्यामसि (परि.) इति पाभे.।

[i]) लेख्याकारलोपः (पा ७, ३, ७०)।

[j]) तु. सस्थ. टि. अधि।

[k]) सपा. निधेहि<>नियच्छ (माश १४,१,४,८ तैआ ४,७,२; ५,६,७ च) इति पाभे.।

[l]) पाभे. छते पृ ११४२ n टि. द्र.।

[m]) सपा. नि ··· दधिध्वम् <> नि···दधिध्वे इति पाभे.।

[n]) पाभे. छते पृ ६५१ e टि. द्र.।

[o]) गत्यभाव इति GW.?।

[p]) तु. सस्थ. टि. अप।

[q]) पाभे. छते पृ १७०६ h टि. द्र.।

